वाणीं भजत गैर्वाणीम्

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.) भारतम्.

संपुटः १० | 15 JULY 1972 | क्रमांकः ७



परीधावि-आषाढांकः | शकाब्दाः १८९४ | मूल्यम् ०-४० पैसाः

# विषयसूचिका








# पर्वतखननेन प्राप्ता हि चुचुंदरी

मार्गाः कृताः मृगा हताश्च बहुलम्,
शिलाः परिवर्तिता बिलानि च परीक्षितानि,
वृक्षाः छिन्नाः ऋक्षाश्चावसन्नाः,
सिंहाः परिबद्धाः नृसिंहश्च परिक्रुद्धाः,
खनित्रैः प्रखातं लवित्रैश्च खंडितम्,
परशुभिर्व्यापृतं कुद्दालैश्च विहृतम्,
पिटकाभिः परिक्षिप्तं पुटिकाभिः मुद् उत्क्षिप्ता,
भटकोटिभिः पट्वीभिर्बाहुबलं दर्शितम्,
प्रत्यन्तपर्वता लोळिताः अत्यन्तागाधं यावत्,
मुख्यशिखरिणो मूलशिला उत्पाटिताः,
शिखराणि शीर्णितानि सुरंगाश्च विरचिताः,
अयमयं मणिः इदमिदं रत्नमितीक्षितं च,
अन्ते किमभवत्? हन्त! हतास्स्मो वयम्,
पर्वतखननेन प्राप्ता हि चुचुंदरी,
गणेशस्य नाभिस्थां कस्तूरीं जिघ्रन्ति
गणाध्यक्षास्सर्वे गड्डुरिका समाजे ॥



# सम्पादकीयम्

## घट्टकुटचां प्रभातम्

स्वातंत्र्यप्राप्तिक्षण मारभ्य भारतस्य महान् क्लेशसमयस्समुपस्थितः । नैतावानासीत् क्लेशः भारतस्य यदा आंग्लप्रभुता पालयति स्म । यद्यपि तत्रापि अपराधिनां दण्डनान्यासन् तथापि तानि न निरपराधिषु पतितानि ।

तदनन्तरं तु देशविभजनकल्लोलः यः स्मर्तुमपि न योग्यः, ततः कश्मीराक्रमणं; रजाकाराणां चेष्टाः इत्यादयः असंख्याका आघाताः आपतन् भारत शिरसि । सकलक्लेशसमुद्धारणेऽपि पाकसीमासंघर्षः रावणचितिवत् ज्वलन्नेवास्त । स च काश्मीरं सामि कबलयित्वापि नाऽशाम्यत् । पूर्णतया काश्मीरं, अवकाशे भारतमेव कबलयितुं पाकवृकः गूढं निरीक्षते स्म ।

तत्फलस्वरूपतया श्रीलालबहादुरशास्त्रिवर्यस्य पालनकाले भारतं दुर्बलं अन्तर्भिन्नं च आलोच्य पाकः हठात्काश्मीराक्रमणाय उदयुङ्क्त । बहुदूरदर्शी लालबहादुरः आत्मरक्षणमात्रेण अतृप्तः पाकस्थानमेव युद्धरंगमारचय्य तस्य कवाटपाटनायादिशत् । अनेन साहसेन च प्रभिन्नेषु बहुषु दुर्गेषु तद्राजधान्या एव विनाशे समुपस्थिते कपटाक्रोशाकृष्टा रष्या ताष्कंट-

सन्धिमिषेण अस्मद्विजयं निरर्थकीचकार । तत्सन्दर्भे च अस्मत्पालकस्य लालबहादुरस्य प्राणा एव समर्पिताः । आत्मलाभसंपादनानन्तरं च पाकः तत् सन्धिपत्रं उच्छिष्टपत्रमिव सममानयत् । फलतः भारतविमानयानध्वंसन - दोषाऽविचारणानि कृतानि तेन । भारतदेशोपरि स्वात्मविमानयानाधिकारं संपादयितुं तेन बहुकार्याण्याचरितानि बहुराज्यानां सहायश्च संपादितः ।

एवं स्थिते क्लिश्यमाने च बहु भारते, पाके निर्वाचनफलरूपो मुसलस्समुदभवत्, येन कोटिसंख्याका कान्दिशीकाः भारतशिरस्यापतिता । पाकश्च भीकरपशुबल राक्षस बलाभ्यां बंगालाप्रजा विनाशयन् ताभिः संघर्षणमनुभवन्नपि सर्पग्रस्तः भेको यथा स्वान्तिकगतां मक्षिकां जिह्वया लेढुमिच्छति तद्वत् भारतसीमानं आक्रमितुं, कान्दिशीकान् शाश्वतं भारते एव स्थापयितुं सदा कलहमाचरति स्म । न तावन्मात्रेण तृप्तः सः, क्षमाशीलं भारतं दुर्बलं संभाव्य आग्रा-प्रभृतिमुख्यस्थलेषु असूचितयुद्धं स्फोटान् प्राक्षिपत् । एतेन प्रबुद्धः भारतकेसरी, पश्चिमप्रान्ते पाकं निरुद्धय युद्धयन् पूर्वप्रान्ते च अल्पेनैव कालेन, कौशलेन बंगदेशं शत्रुनिर्मुक्तमकरोत् । बंगाले च बहुसहस्रपाकयोधिनो बन्दीकृत्य कृत्यवित् एकपक्षेण युद्धविरतिमघोषयत्, बंग्लाविमोचनमेवात्मध्येयमिति तदाक्रमणं च नात्मसंकल्पितमिति प्राकटयत् । तेन च अमेरिकेतराणि राज्यानि प्रमुदितानि । तस्य तु अयं सन्दर्भः गळकपित्थ आसीत् । यथाकथं वा याह्याखानेऽपवाहिते भुट्टोभट्टे राज्यमधिष्ठिते भारतपाकसन्धिः सिम्लायां समघटि ।

अत्रेयं न निर्युद्धसंधिः, अपि तु परस्परबलप्रयोगाभावसंधिः । पाकाक्रान्तः ६० मील परिमितो

भूभागः भारताय, भारताक्रान्तः ५००० मीलपरिमितो भूभागः पाकाय प्रत्यर्पणमिति सारांशस्तत्र ।

अयं च सन्धिः ताष्कंटसन्धेर्नीतिभिन्नः तादृशमेव फलं प्रसोष्यति । युद्धे आक्रांतस्य भूभागस्य वस्तुजातस्य वा प्रत्यर्पणमर्यादा यदि अनुवर्त्येत तदा युद्धानां अवरोध एव न भवेत् । ताष्कंटसंधिरस्य युद्धस्य यथा कारणमभूत्तथा अयमपि सन्धिः अन्यस्य युद्धस्य आमुखमारचयेत् । निर्युद्धसंधे रनंगीकर्तुः तदीयायाः संपदः प्रत्यर्पणं नाम आत्मशिरश्छेदाय आत्महस्तेन खड्गप्रदानमेव नान्यत् । निर्युद्धसंधेः अनंगीकारे एव तस्य युद्धसन्नाहिता स्फुटतरं प्रकाशते । तदनुगुणं च अम्मेरिकीया यथापूर्वं तं आयुधादिभिः सन्नहयितुं वाचो ददति, अस्माभिरपि स्नेहमावर्तयन्ति ।

अतः भारतीयैः अप्रमत्तैः सदा असुप्तैश्च भाव्यम् ।

॥ मा विद्विषावहै ॥



श्रीबालगणपतिभट्टः, श्रीरंगपत्तनम्.

अट्टशूले परिवेषकं प्रति "मधुरभक्ष्ये पिपीलिकाः सन्ति ।"
भयस्यावकाश एव नास्ति ते सर्वेपि सर्वथा मृताः, न दंशन्ति ।

  

# पदार्थविद्यासारः

[पूर्वानुबन्धः]

शिष्यः– हे महाशय! मय्यनुग्रहं विधायैतद्भूगोळवर्तिविविध-देशतो यानि सर्वाणि वस्तून्युत्पद्यंते तानि विशेषयित्वा मां ज्ञापयिष्यसि। एवं भूगोळोपरि तान् सर्वान् देशांश्च मां दर्शयिष्यसि?

गुरुः– बाढमवश्यमेव त्वां दर्शयिष्यामि।

शिष्यः– एषियाख्यदेशे किं किं वस्तु समुत्पद्यते?

गुरुः– भूमण्डलेऽस्मिन् यावन्तः खण्डास्सन्ति तेषां मध्ये एषियाख्य-देशोऽतिधनाढ्यः, फलवानपि, यतस्तस्मिन् देशे सर्व-विधानि सस्यानि विविधप्रकाराणि फलानि च जायन्ते। अस्माकं जीवितार्थं सुखेन समययापनार्थं च तस्मिन् देशे नानावस्तूनि जायन्ते। एवं तस्माद्देशादन्येषु देशेषु बहुमूल्य-प्रस्तरचित्रवणिग्द्रव्यपेयवस्सुविशेष - वस्त्रविशेषादयः प्रेषिता भवन्ति।

शिष्यः– देशविशेषे किं द्रव्यविशेषो जायते?

गुरुः– आं, यदि सर्वस्मिन् देशे एकविधं द्रव्यमुत्पन्नं स्यात्तर्हि सुदूर-देशनिवासिनां लोकानां प्रायः किमपि व्यवहारकर्म नोत्पद्येत। पश्य, वंगदेशकान्यकुब्जादिदेशेषु तण्डुल - सिता - लवण-गुटिकाकीटसूत्र - तूल - नीली - अहिफेनाख्यमादकद्रव्यवि-चित्रवसनादीन्युत्पद्यन्ते। पश्य, शालु इति प्रसिद्धेन रां-

कववस्त्रेण काश्मीरदेशोऽतिप्रसिद्धोऽस्ति । लङ्कायां मधुयष्टिका - तूल - मरीचादीनि नानावस्तून्युत्पद्यन्ते । तत्प्रदेशे समुद्रान्मुक्ताफलानि संगृह्यन्ते । ब्रह्मदेशे च स्वर्ण - रजत-सूर्यकान्त - नीलकान्तादिमणीनां बहून्याकरस्थानानि सन्ति । एवं तत्र महारण्यानि बहूनि सन्ति, येभ्यो बृहन्नौघटनार्थं महांतो वृक्षा जायन्ते । एवं तस्मादपि देशात् कार्पासहस्तिदन्तादीनि द्रव्याण्यानीतानि भवन्ति । ब्रह्मदेशसमीपस्थोपि द्वीपात् रंग - मरीच - गजदन्त - वेत्र - गन्धवीर्यप्रभृतीन्यानीतानि भवन्ति । चीनाख्यदेशे विविधानां रत्नानां आकरा बहुमूल्यधातवश्च विद्यन्ते । तस्मिन्नपि देशे तण्डुलाः सस्यानि नानाविधपेयद्रव्यविशेषाश्च जायन्ते । एवं गुटिकाकीटसूत्र- काचपात्र - लिपिपत्रविशेषैस्तद्देशोऽतिप्रसिद्धोऽस्ति । पारश्यदेशात् गुटिकाकीटसूत्रे ऊर्णानिर्मितविचित्रासनीचर्म - मौक्तिकादीन्यानीतानि भवन्ति । तस्मिन् देशे च शाकपुष्पफलानि मेषपशवश्च सुष्ठु जायन्ते । आरभीदेशतश्चोत्तमघोटक्रोष्ट्रोष्ट्रीकाह्वाख्यवणिग्द्रव्याणि च भद्राणि जातन्ते ।

शिष्यः— यूरपाख्यदेशे किं वस्तूत्पाद्यते ?

गुरुः— इंग्लण्डाख्यदेशे समीचीनोर्णा - तीक्ष्णलौह-सीसक - पाषाणमयांगार - काचपात्राणि, सस्येषु च यव - गोधूमाम्दयो जायत्ते । तत्समीपस्थितैर्लण्डाख्यदेशे नवनीतं लवणाक्तमांसं क्षुमा सूत्रीयवसनादीनि वस्तुनि समुत्पद्यन्ते । फ्रान्स् स्पेयिन् पोटन्गालाख्यदेशेषु समीचीना मदिरा नारंगफलजंबीरफलोदुम्बरविशेष - खर्जूरविशेषशुष्कद्राक्षाफलादीनि जायन्ते । भूमध्यस्थसा रसन्निधिदेशेषु तूल - गुटकाकीट-

सूत्र - रेचनीतैलादीनि जायन्ते । मदिराभिधानदेशे चोत्तमो द्राक्षारसो जायते । तद्देशनामधेयानुसारेण लोकास्तमेव मदिरां वदन्ति । सुञ्देन डेन्मार्कजर्मन्याख्यदेशेषु बृहन्नौ-गुणवृक्षक - विदीर्णदारुपट - देवदारुतरु - ताम्रलोह - लोमज-वस्त्र - पशुचर्म - यक्षधूप -आलकातराख्यनिर्यासादीनि बहूनि जायन्ते । हालण्डाख्यदेशतः क्षुमा - शण - नवनीतपणीराख्य-प्रभृतीनि द्रव्याणि वर्षेवर्षे देशान्तरे प्रेषितानि भवन्ति । रुषियाख्यदेशे शण - क्षुमा - तारपिनाख्यतैल - यक्षधूप - आलकातराख्यनिर्यास - लोमजवस्त्र - पशुचर्म - पशुमज्जा-प्रभृतीनि द्रव्याणि बहूनि जायन्ते ।

शिष्यः– अफ्रिकाख्यदेशे किमुत्पद्यते ?

गुरुः– तस्मिन् देशे स्वर्णरेणवो गजदन्ताः जलपायीति प्रसिद्ध-फलानि च जायन्ते । एवं खर्जूरीमदिरा - यवक्षार - पशुचर्म-गोधाख्यनिर्यासप्रभृतिविविधौषधानि समुत्पद्यंते ।

शिष्यः– अमेरिकाख्यदेशे किमुत्पद्यते ?

गुरुः– उत्तरामेरिकाख्यदेशे चतुष्करबृहद्दारुणी ताम्रकूटानि पशु-चर्माणि सुलोमपशुचर्माणि आलकातराख्यवस्तूनि यक्षधूपा-दीनि च जायन्ते । अमेरिकाख्यदेशसमीपस्थोपद्वीपे तण्डुलाः सिताः काह्वाख्यवस्तूनि तूल - नीलीप्रभृतीनि च वस्तूनि जायन्ते । दक्षिणामेरिकायां स्वर्णरजतपारदादीनि जायन्ते । एवं पिरुवृक्षत्वचः पिरुपलस्राख्यवस्तूनि नारिकेळनीली-तूलकानि काह्वाख्यवस्तूनि च जायन्ते ।

शिष्यः– हे महाशय, मां प्रति परमानुग्रहं प्रकाशितवान्, तेन कृतार्थोऽह मभवं। मयेदानीं ज्ञातं मनुष्याणां हितार्थं जगदिदमेकं महाकोशागारमभवत्। परमेश्वरप्रशंसाकरण-मस्माभिरत्युचितमेव। अस्मिन् जगति कोटिकोटिमनुष्या-स्सन्ति। तेभ्यस्सर्वेभ्यः हिताय ईदृग्बाहुल्यरूपेण भक्ष्यं वस्तु विद्यते। अस्माकं मनस्येवं शङ्कापि न भवति, यत्तदभावो भविष्यतीति। एतत्सर्वं यावदहं विवेचयामि तावन्मे संपूर्ण-बोधो भवति। परमेश्वरेण विश्वेषां जीवनार्थं एष प्रपञ्चः, एतानि वस्तूनि च सृष्टान्यभवन्निति।

पदार्थविद्यासारस्समाप्तः



अवधेयम्– अयं पदार्थविद्यासारः प्रथमभागः। मन्ये द्वितीयभागोपि तेन महात्मना रचितो भवेदिति। यदि सोपि लभ्यः केनापि प्रेष्येत तदा कृतज्ञतापूर्वकं अत्र प्रकाश्येत।

प्रकाशकः.



# श्रीगिरौ (तिरुमले)

# श्रीलक्ष्मीनारायणसहस्रहोमकुण्डक्रतुः

२८-६-७२ दिने प्रातः एष क्रतुः तिरुमले वेदपाठशालायाः आग्नेय्यां दिशि विस्तृतभूमिभागे निर्मितेषु तृणपर्णकुटीरेषु प्रारभ्यत। उ० वे० प्र० परमहंसपरिव्राजिकाचार्येण त्रिदंडिना श्रीमन्नारायण - रामानुजजीयरस्वामिना भगवदाज्ञया भगवानेव संकल्प्यतीति कारयतीति च धिया भावितोऽयं क्रतुः सकलप्रपंचक्षेमाय प्रपंचोपद्रवनिवारणाय सर्वमानवसौख्याय च अक्रियत।

षोडशतृणकुटीषु १००८ होमकुण्डाः सन्निधापिताः येषां च पुरतः उन्नतवेदिकासु प्रत्येकं श्रीलक्ष्मीनारायणप्रतिमे अवस्थापिते। प्रधानकुटयां च श्रीजीयरस्वमिनां आराध्यमूर्तिभिस्साकं श्रीलक्ष्मीनारायणयोः चन्द्रशिलामूर्ती, ताभ्यां च साकं षोडश शिलामूर्तयः तावत्य एव पंचलौहमूर्तयश्च प्राणैः प्रतिष्ठिताः प्रतिकुटीरं विभक्ता आसन्।

क्रतु - प्रारंभाय आंध्रप्रदेशराज्यपालः श्रीमान् खंडूभाय् देशाय् महोदयः, देवादायमंत्री श्रीमूर्तिराजः, भूतपूर्व - बीहारराज्यपालः श्री अनन्तशयनं अय्यंगार्यः इत्यादयः प्रमुखाः सहस्रशः समागच्छन्।

तत्संदर्भे वेदवेदान्तागम-प्रदर्शनस्य आंध्रप्रदेशराज्यपालः

प्रारंभमकरोत् । मूर्तिराजे आध्यक्षे सति देवस्थानबोर्ड चैर्मनः श्रीरंगराजः स्वागतवचनान्युपायनीचकार । तत्संदर्भे देवादायमन्त्री मूर्तिराजः अभणत् -श्रीनिवासालयस्य द्वितीयद्वारनिर्माणविषये आगमिकानां अंगीकारः संपादित इति, तन्निर्माणरीत्यां वास्तुकानामभिप्रायचयनाय प्रयत्यते इति च ।

ततः उत्सवयात्रया ऋत्विजः पारायणकृतः उभयवेदाध्येतारः, उपन्यसकाः याजकाः पूजकाः यजमानाः नायकाःसं कीर्तनपराः द्रष्टारः अन्ये च बहवस्संभूय विविधवाद्यघोषैस्साकं यागशालामविशन् । होमकुण्डेषु च अग्निहोत्रालंकृतेषु, तत्तन्निर्णीतस्थलेषु वेदपुराणशास्त्रप्रबन्धपारायणघोषाः दिवमस्पृशन् । श्रीमन्तं खंडूजायिदेशायं पुरस्कृत्य यजमानाः पूजाभारभन्त । अग्न्याराधनं, पंचसूक्तहोमः, अष्टाक्षरीहोमः, श्रीमन्त्रहोमः, क्षीरतर्पणमिति होमक्रमः प्राचलत् । श्रीविष्णुसहस्रनामभिः लक्ष्म्यष्टोत्तर - शतनामभिश्च देवार्चास्समभवन् । अन्ते पूर्णाहुतिश्च निर्वर्तिता । वेदमण्डपे ऋत्विग्भिः ब्रह्मगायत्रीमन्त्रजपः चतुर्वेदपारायणं, नारायणोपनिषदः समष्टिपारायणं च निरवर्त्यन्त ।

दिव्यप्रबन्धमण्डपे चतुस्साहस्री च आवर्त्यत । इतिहासमण्डपे पुराणानीतिहासा वेंकटेश्वरमाहात्म्यं च अपठ्यत ।

ऋत्विजां यजमानानां द्रष्टॄणां सहायकानां च भोजनादिप्रबन्धः षोडशसु स्थलेषु अक्रियत यत्र च तत्तच्छाखानिष्टाः स्वसौकर्यं अवृण्वन् ।

एषा रीतिः १०–७–७२ पर्यन्तं दैनंदिनी प्रावर्तत ।

सहस्रस्तम्भमण्डपे च प्रतिदिनं मध्याह्ने उपन्यासाः प्रावर्तन्त यत्र चतुर्वेदविशेषानुदिश्य

पांचरात्रवैखानस - शैवाद्यागमा-नुद्दिश्य च तत्तद्विद्वद्भिः महो-पन्यासा अदीयन्त ।

एतत्संदर्भे श्रीमन्नारायणरा-मानुजजीयर महोया: वेदाचार्य-विद्यापीठस्य स्थापनावश्यकतां प्रास्तुवन् ।

प्रतिसायं श्रीनिवासस्य श्रीवीथ्युत्सवेन पुरतः प्रबन्ध-गोष्ठ्या, पृष्ठतः वेदगोष्ठ्या च संवलितेन लक्षशो भक्तैर्भग-वतैश्च संभरितः श्रीगिरिः साक्षाद्वैकुण्ठधामेव आनन्दयति स्मेति नाऽत्युक्तिः ।

न्यायमाला

# अर्धवैशसन्यायः

" अवरः "

अर्धं वैशसस्य यत्र तत्र अर्धवैशसन्यायः प्रवर्तते । विशसनं नाम मारणम् । मारणक्रिया न सम्पूर्णा चेत् तर्हि अर्धवैशसमेव निष्पन्नमिति मन्तव्यम् । यः प्राणी विशस्यते मार्यते वा न स पूर्णतया विशस्तः मृतो वा, अस्या मवस्थायां तस्य प्राणिनः कीदृशी दशा स्यादिति भाव्यताम् । स न ताव दमृतः, न वा विमृतः । मृता-मृतावस्थायां स प्राणी जीवति वा म्रियते वा इति निश्चयं वक्तुं न शक्यम् । संक्षेपतः जीवन्मृतावस्था, जीवच्छवत्वावस्था वा प्राप्नेति इति वक्तुं युक्तम् ।

एवमेव असमर्थीकरणे निष्प्रयोजकत्वापादने, अकिञ्चित्करत्वापादने वा अर्धवैशसन्यायप्रवेशो भवति। उदाहरणार्थं— "संभावितस्य चाऽकीर्तिर्मरणादतिरिच्यते" इति वाक्यमेव गृह्यताम्। सम्माननीयानां राज्ञां शत्रुभिः शिरश्छेदः न तावद्दुःख जनयति यावद्बन्धनं कारागृहनिक्षेपणम्। अतः शत्रुभिर्बन्धनं राज्ञां अर्धवैशसमुच्यते। संभावितस्य च अकीर्तिः अर्धवैशसमेव। राजाज्ञा न कदापि अवमानं सहते; एवं सति आज्ञाभंगश्चेत्स्या त्तर्हि राज्ञोऽर्धवैशसमेव संप्राप्तम्। नारीणामयं स्वभावः यत्सहशयनं भर्त्रा साकं सुखावहमिच्छन्तीति। तथा सति पृथक्छय्या च नारीणा मर्धवैशसमुच्यताम्।

भोग्यं वस्तु सन्निधाप्य, भोक्ता भोक्तुं नाऽनुमन्यते चे दिदं अर्धवैशसा दतिरिच्यते। स्वातन्त्र्यं तु दत्तं; परन्तु देशं विभज्य। नन्विदमर्धवैशसं न भवति? उच्यते वाचा, नानुमोद्यते क्रियायां, तदप्यर्धवैशसम्। गम्यतामित्युक्त्वा गच्छतः पदमाकर्षति चेत् तस्य कृत्यमर्धवैशसमिति मन्यताम्।

एवंरीत्या अर्धवैशसप्रक्रियाः बहुधा भवन्ति।

"अपटुत्वार्पणेऽकिञ्चिकारित्वापादने तथा।<br>
अवमानेऽप्यमाने च अर्धवैशसमीर्यते"।



# मां न विस्मर, शंकर

ले० या. वि. देवासकरः, वटपत्तनम्.

यस्यां गंगा वहति सुसरित्पुष्टिदा पूजनीया
रक्षार्थं वा वसति सुतरां देवतात्मा हिमाद्रिः ।
भूमौ तस्यां किल कलियुगे भेदवादं निरस्यन्
आद्याचार्यो यतिषु जनितः शंकरः शंकरेण ॥

पिता शिवगुरुर्यस्य माताऽऽर्याम्बा च वै स्मृता ।
विद्याधिराज आसीच्च शंकरस्य पितामहः ॥

बाले वयसि बालस्य शंकरस्य शिवात्मनः ।
पंचत्वमगमत् प्राज्ञो गुरुः शिवगुरुः पिता ॥

  

संन्यासैकपरं प्रेक्ष्य शंकरं लोकशंकरम् ।
अनुमेने गृहीतुं तं दीक्षां तस्य च तां प्रियाम् ॥

धर्मप्रचारकार्यार्थं, दम्भं हन्तुं च विस्तृतम् ।
त्यक्तुकामो गृहं वै स, शंकरो लोकशंकरः ॥

"गच्छ, ताताऽधुना गच्छ, विजयी त्वं भविष्यसि ।
किंतु विस्मर मां नैव, मां न विसार, शंकर ॥
सत्वरं गृहमागच्छ, प्रागच्छाऽहं यदाऽवशा ॥

  

तदाऽवदन्महाचार्यो "मातश्चिन्ता वृथा तव ।
उपेक्षां न करिष्यामि," गुरूणां जननी गुरुः ॥

यदा त्वमवशा मां च स्मरिष्यसि तदाऽचिरात् ।
आगमिष्यामि गेहं वै, सत्यं सत्यं वदाम्यहम् ॥

  

जराजर्जरभूता सा यावत्सस्मार शंकरम् ।
तावत्स दूरदर्शी च ददर्श जननीं पुरः ॥

गृहागतः स आचार्यः स्वबन्धूनाह्वयद्यदा ।
तदा ते शत्रवो भूत्वा कार्यं कर्तुं च नागताः ॥
परस्परेषु संन्यासं निनिन्दुस्तं च ते भृशम् ॥

अभयः शंकरो भूत्वा काष्ठान्यानीय सत्वरम् ।
प्राङ्गणे स्वगृहस्याऽसौ अग्निदाहं ददौ प्रधीः ॥

प्रोवाच च तदैवं सः–

जानन्तु चाद्यतः सर्वे "नरो भवति चानृणः" ।
किंतु नास्ति स नास्त्येव जनन्या अनृणः कदा ॥

श्रेयः संन्यासधर्मे च ज्ञानान्मोक्षश्च लभ्यते ।
सर्वश्रेष्ठा तु मात्राज्ञा, यावच्चन्द्रदिवाकरौ ॥



# गांधीकथा

ले० श्री बालगणपतिभट्टः, श्रीरङ्गपत्तनम्.

१९२५ क्रिस्ताब्दे जूनमासे महात्मागांधीद्वारा खादीप्रचारस्य चरखा-उद्योगस्य च प्रयत्नो विशेषतः चलतः स्म । देशबन्धुः चित्तरंजनदासमहोदयः तदानीं आत्मनः निवासे कानिचन वासराणि वस्तुं दार्जलिंगनगरं आजुह्वव गांधीमहाशयम् ।

देशबन्धोः आलयः इदानीं महत् यात्रास्थानमभूत् । अस्मिन् आकर्षककेन्द्रे सर्वदा चरखा (तांतवचक्रस्य) यंत्रस्य मधुरध्वनिः श्रवणपथं प्राप्नोति स्म ।

गांधीमहात्मनः छायाचित्राणि गृहीतुकामानां तस्यैव हस्तांकनार्थं विशेषोत्सुकानाञ्च ओघः अनवरतं तं परितः वर्तते स्त । सर्वेभ्योपि किमपि मूल्मं आत्मनः चित्रार्थं, हस्तांकनार्थं वा सः अवश्यं गृह्णाति स्म । किन्तु तन्मूल्यं न वा द्रव्यरूपम्, धनरूपम् वा वस्तुरूपम् । प्रत्यहं होरार्धमात्रं तांतवचक्रचालनं आहोस्वित् खादीधारणम् एव मूल्यमासीत् ।

जातु काचन बालिका महात्मनः सविधे आगता स्व - हस्तलेख - संग्रहं क्षुद्र - पुस्तकं (autograph book) गृहीत्वा । आत्मनः मूल्यं यथावदयाचे महात्मा । सा च बालिका विनम्रतयोररीचकार । गांधी "धन्यवादः, स्वहस्तांकनं अवश्यं दास्यामि" इति ब्रुवन्नेव तस्मिन्नल्पपुस्तके अलिखत् "Never make a Promise in haste. Having once made a promise, fulfil it even at the cost of

your life" इति (अर्थात् अविचार्य प्रतिज्ञा न कर्तव्या। प्रतिश्रवः यदि क्रियते तर्हि प्राणमूल्येनापि रक्षितव्यः सः)

सौराष्ट्रविभागे तदानीं क्षुद्रदेशीयराज्यानां मेलनेन एकं महद्विभागं कर्तुं प्रयत्नः प्रचलति स्म। तस्मिन्नेवावसरे भावनगरदेशीयराज्याधीशः महात्मानं गांधीमहोदयं संद्रष्टुं आगच्छन्। प्रदोषे महात्मनः प्रार्थनासभानन्तरं संदर्शनवेला इति निर्धारितमासीत्।

कल्यादेव महाराजस्य स्वागतार्थं विशेषः उत्साहः आश्रमवलये संदृश्यते स्म। प्रत्येकमपि आश्रमवासिनं प्रति "नृपतेः स्वागत-कर्मणि कथमपि न्यूनता कर्तव्या न। तस्यागमनक्षण एव महता संभ्रमेण आश्रमे तस्य प्रवेशः कारयितव्य इति महात्मा निर्दिदेश च।

सायं पुनः स्मरण च मदात् गांधीमहोदयः "तैलशकटादवतरन्तं राजानं महादरेण प्रवेशयितव्यम्" इति। आश्रमस्थानां अयं महाविस्मयविषयोऽभूत् "कृतो वा गांधी अपूर्वव्यवहारं चिकीर्षति भावनगरेशं प्रति?" इति।

संध्यायां आश्रमजनाः नियतसमये श्रेण्यां नरेशं निरीक्षन्ते स्म। अन्तः कक्षायां महात्मा च।

यथाकालं भूपति राजगाम। महात्मा महताऽऽदरे तं प्रत्युद्गम्य कोष्ठं निनाय। द्वयोर्मध्ये वार्तालापः प्राचलदल्पकालम्। राज्ञः गमनानन्तरं एकः महात्मनोऽनुयायी अपृच्छत् "बापूजी! भवान् कृतो वा स्पयमेव प्रथमतः नरेशं नमितुं उत्तस्थौ? इति।

"अहं भावनगरस्य शामलदासमहाविद्यालयस्य छात्रः। स तु नरेशस्य महापाठशालासीत्। अतः अयं भावनगरेशः ममापि प्रभुः बभूव। तस्य प्रतिष्ठादानं मदीयं कर्तव्यमाद्यं खलु" इति उत्ततार महात्मा।

महात्मनः नम्रतां शिष्टव्यवहारं च दृष्ट्वा सर्वे मुग्धा अभूवन्।

★

# संस्कृतप्रचार - उद्यम - काव्यानि

(गूढलेखिनी)

'तमसाऽच्छादिततम' इव न परिस्थितिरस्ति ते ।
'संघे शक्तिः कलौ युगे' इत्यस्य न विस्मृतिरस्तु ते ॥
उत्साहयस्व निजयुक्ति - उक्तिभिः सहकारि - सुहृदश्च ते ।
जानीहि तत्तथा कर्तुमिष्टं शक्तिर्वर्धिता यथा स्यात्ते ॥
स्वार्थपरमार्थदायके सत्कर्मकरणे का वो व्यथा ?
स्वशक्तिव्ययेनैव कृतेन हि भोः दौर्बल्यं प्राप्ताः न अन्यथा ॥
निराकर्तुं तिमिरं अखिल - अवनीतलव्यापकं ।
'नियुक्ताः न हि, न अलं वयं', इति यदि दिनकरैरेव गादितं ॥
निमेषार्धं, श्रुत्वा, 'हाः कथमिदं' इति उच्छ्वसेज्जगदिदं ।
निजे मनसि ज्ञायेत विनय इत्येवैतदुक्तं ॥
निर्मातारमुद्दिश्य ह्यपरिमितब्रह्माण्डपतिं ।
निजाभिः आभाभिः उद्भासयतु हि भूमण्डलमिदं ॥

प्राप्य यथोक्तं नरजन्म सुरदुर्लभम् ।
शरीरं पुनर्भारतधूल्यलङ्कृतं ॥
नाधीतवान्यः कदापीह संस्कृतं ।
वृथा व्यतीतं तेन स्वकीय - जीवनं ॥
आंग्लाः गमिष्यन्ति भविष्यति सुस्वराज्यं ।
भाग्यं उदेष्यति प्रसरिष्यति संस्कृत - ज्ञानराशिः ॥
इत्थं हि भावयति देशगते प्रचारके ।
हा हन्त हन्त राष्ट्रश्रियं विज्ञानमपससार ॥

भोः गर्वाणीप्रचारकाः ! गन्तव्यमुद्यमे
यत्र वसति, मिलति च 'धनं' 'राज्यं' ।
वस्तु - विक्रये संस्कृत - प्रचारादिकं
एकस्मिन् पथि बहुकार्यसिद्धिः ॥

# वेदविज्ञानं सर्वसंक्षेमप्रदम्

ऋतुप्रारंभदिने वेदवेदांतागमसाहित्यप्रदर्शनं प्रारभमाणः आंध्रप्रदेशराज्यपालः श्रीखंडूबाय् देशायमहोदयः अभाणीत् –

वेदविज्ञानं अस्मदीयं किश्वजनीनं। यज्ञैः संकुचितप्रान्तीयप्रयोजनानि नापेक्ष्यन्ते, किन्तु सर्वे जनास्सुखिनो भवन्तु इति सर्वजनक्षेम एव आकांक्ष्यते। वेदेषु उपनिषत्सु च निक्षिप्तं ज्ञानधनं अमूल्यं अनवधिकं च।

इदं वेदविज्ञानं न केवलं भारतीयस्यैव धनं, किन्तु अखिलप्रपंचजनेषु तत्कृतलाभो विभजनीयः। अधुना श्री जीयर स्वामिभिः तिरुमलक्षेत्रे प्रवर्त्यमान एष ऋतुः स्वात्मलाभाय नैव संकल्पितः, अपि तु सकलमानवानां मनश्शान्तये एश्वर्यार्थं अभिवृद्ध्यर्थं च प्रपंचे युद्धपीडापरिहारार्थं च आचर्यते। वेदे कर्मकांडः मनवानां देहस्य मनसश्च सत्प्रवर्तन - शिक्षणार्थं, पवित्रवातावरणस्य कल्पनार्थं च निर्दिष्टः। अस्मदीयाः ज्योतिर्विज्ञाः बाह्यसाधनानपेक्षाः एव गोळान्तरलोकान्तरविषयान्स्फुटं अवगच्छन्ति स्म। ग्रहगतिगणनया ग्रहणकालस्थल - परिमाणादिनिर्देशेन च तेषां विज्ञानातिशयः स्फुटं प्रतीयते।

अतः वेदविज्ञानं संरक्ष्य तत्र परिशोधनं च विधाय तत्र बहिर्गतानां रहस्यांशानां सर्वत्र प्रपंचे प्रकाशनमावश्यकम् इत्यवोचत्।



# भारत नेपालयोः परस्पराश्रयता

ले०. साहित्याचार्यः, श्यामकुमाराचारी, सोमनाथ, धिमीरे.

यथा अस्माकं मानवदेहपिण्डे सर्वेषां अङ्गानां समानत्वे महत्वे च सत्यपि कानिचिदंगानि प्रधानानि कानिचन अप्रधानानि भवन्ति तथा प्राकृतपार्थिवपिण्डेपि कानिचन अंगानि ध्रुवाणि कानिचन अध्रुवाणि च भवन्ति । अध्रुवाणि अंगानि क्षीणान्यपि शरीरे किंचिद्वैगुण्यमुत्पादयन्ति, तथा च स्फुटितचक्षुः पुरुषः काणः गलिचरणश्च यथाकथमपि कार्यं करोत्येव । तथाविधै रंगैः पुरुषो न म्रियते । ध्रुवाणि अंगानि शिरोहृदयादीनि छिन्नानि भवेयुश्चेत् महान् आघातो भवेत् । तादृशः पुरुषः कथमपि जीवितुं न प्रभवति इति सर्वविदितं, न तत्र कापि विप्रतिपत्तिः । एवमेव पार्थिवपिण्डे नेपालदेशः शिरःप्रायः, पौण्ड्रवर्धननेपालः पीठं, नयनयोः युगे तिवाराहे, देहली हृदयम् ।

अतस्तत्र महान् आघातो भवेच्चेत् पार्थिवपिंडस्य अथवा भूभागस्य महती विनष्टिः स्यात् । तथा च व्यष्टिपिंडे वर्तमानासु मानवजातिषु ब्राह्मणशरीरं मूर्धन्यं इति शास्त्रानुमतम् । यदि तत्र कोप्याघातो भवेत् मानवजातेः महान् विनाशः स्यात् इत्यत्र तत्त्वविदः निश्चितबुद्धयो भवन्ति ।

अद्यत्वे विज्ञानचमत्कारबहुले समये ब्राह्मण्यानादरपरायणैर्लोकैर्जनता गतधृणं निर्दयं पिशाचवत् निष्पीडचते संह्रियते नरकंकालैः समस्ता पृथ्वी समाच्छाद्यते च । तथा च अणवस्त्रप्रहारेण सहस्राधिकयोजनमध्यवर्तिनः स्थावरजंगमाः सर्वेपि

प्राणिनः क्षणेन भस्मसात् क्रियन्ते। यदि ब्राह्मणस्य ब्राह्मणदर्शितमार्गस्य संरक्षणं अनुसरणं च भवेत् आसुरवैभवमत्ताः लोकाः निरीशप्राणिषु ईदृशमत्याचारं नैव कुर्युः। परन्तु खेदस्येयं वार्ता ब्राह्मणा भ्रश्यंते भ्रंश्यन्ते च। यथा रक्तनीलादिवर्णबहुलेषु वस्त्रेषु बहूनां धूलीनां निपाते सत्यपि तादृशी मलिनता न ज्ञायते यादृशं शुभ्रे सिते वाससि स्वल्पमपि पतितं धूलीकणं स्पष्टीभूय वस्त्रं कलंकयति। तथा अन्यासु जातिषु समुपलब्धमनाचरणं न तथा स्पष्टीभवति ब्राह्मणजातौ यथा स्पष्टीभवति। अत एव भारतीयैः नेपालीयैश्च विद्वद्भिरधिकारिभिश्च मानवपिण्डसंरक्षणार्थं ब्राह्मणपिण्डं यत्नतो रक्ष्येत। अत्र बहु वक्तव्यं वर्तते सन्दर्भविस्तरभयात् न प्रपञ्च्यतेऽत्र।

तथा च अस्य भूपिंडस्य सर्वतो ललामभूतं सर्वभूभागेभ्यः समुन्नतं एतस्य भूपिंडस्य शिरस्सदृशं गौरीशिखरप्रभृतिसर्वोन्नतशिखरविराजितं महाराजभरतस्य राजधानी, येनेदं भारतवर्षमिति व्यपदिशन्ति, जानकीजन्मभूमिः पुलस्त्याश्रमः, पुलहाश्रमः, पाशुपतक्षेत्रं इति चम्पकनारायण - भक्ति - नारायण - नीलनारायणाद्यनेकपुण्यक्षेत्रैः रिमं नेपालं विद्वांसः शिरोभागं प्रचक्षते। अत एव यथा शरीरस्य शिरोभागः सर्वतः संरक्ष्यते तथैव भूपिण्डस्य शिरोभागसदृशो नेपालदेशः सर्वतोभावेन संरक्षणीयः। शयानोपि पुरुषः शिरसि उपबर्हं करोति, उपबर्हाभावे काष्ठेष्टकादिभिर्वा उपबर्हणं कृत्वा शिरसः औन्नत्यं विधाय सानंदं स्वपिति इति अनुभवसिद्धमेव। अतः तथ्यमिदं विदित्वा ब्रह्मांडशिरोभूतस्य नेपालस्य संरक्षणे सर्वैस्सावधानता विधेया। केवलं प्रदेशस्य संरक्षणे कार्यं नैव सेत्स्यति, किन्तु तस्य नाम-स्थानइतिवृत्तानामपि संरक्षणं कार्यं। यस्य नाम गौरीशंकर इति

पुराणप्रसिद्धं "गौर्यास्तु शिखरं यत्र गच्छेत् स्कन्दनिषेवितम्" इति स्कन्दे । परन्तु तस्य नाम्नि आधुनिकैः महत् परिवर्तनं कृतं । केचन माउण्ट एवरेस्ट् इति, केचन सगरमाया इति च कथयन्ति । ईदृशेन व्यवहारेण इतिवृत्तस्यापि लोपो भविष्यति । तथा च वारं वारं पर्वतारोहिणां प्रयासतः पथनिर्माणात् तस्य शिखरस्य रूपभङ्गोपि संभाव्यते । पूर्वं नाम भङ्गः, तदनु रूपभङ्गः, पश्चात् इति वृत्तभङ्गः । एवं भङ्गस्यैव आपिण्डः कबन्धसहशो भवेत् इति विचार्येव भारतीयसर्वकारः नेपालस्य उन्नत्यै सर्वतोभावेन प्रयत्नशीलो वर्तते । अत्र भारतीयसर्वकारः प्रशंसामर्हति । अथ च देहली नेपालसिंहासनस्य संरक्षणायापि बहुकालादारभ्य सावधाना वर्तते । दिल्लीपुरीस्वस्य हृदयत्वात् हृदयस्य संरक्षणे कृते धमनीसिरादिमार्गेण सर्वेषु भूमार्गेषु स्वस्य रुधिरसंचारणेन भूपिण्डस्वरूपिणः शरीरस्य सर्वदा उल्लाघता स्यात् इति विचारयन्तो नेपालीया अपि धन्यवादं अर्हन्ति ।

अतः गोरक्षनेपालादेशस्य जानकीजन्मभूमौ जनकपुरधाम्नि श्रीलक्ष्मीनारायण - सहस्रहोमकुण्डक्रतुः विराट्विश्वहिन्दूसम्मेलनञ्च भवेतां यदि सर्वसिद्धिदायके स्यातां, न तु गोभक्षदेशे तादृशसिद्धिः ।

# भारतीयविज्ञानरहस्यानां रक्षणे व्यापने च भारतसर्वकारस्य औदासीन्यं अनर्थकरं

आसन् पुरा विचित्रशक्तिशालिनः महापुरुषाः येऽद्य कथामात्रशेषाः परिहासविषया वर्तन्ते। इदमस्माकं दौर्भाग्यं यदस्मदीयेषु असामर्थ्यं परेषु च सामर्थ्यातिशयं भावयामो वयं। अथापि अद्यपि बहवः प्रभावशालिनः जीवन्त्येव येषां मन्त्रः, औषधं, कलाविशेषो वा मुग्धान् विधत्ते पाश्चात्यविज्ञानाधिकानपि।

परन्तु पोषकाभावात् भीषकभावाच्च ते स्वकौशलं "जीर्णमंगे सुभाषित" मिति भर्तृहरिवचनभंग्या आत्मन्येवारोप्य जीवनं समापयन्ति। अत्र द्वित्र विशेषानुदाहरामः।

१. दक्षिणपट्टिकामार्गे पोलिरेड्डिपालेंनाम्नि निस्स्थाने पामुलनरसय्येति कश्चन सर्पविषहरणकोविद आसीत्। स च तंत्रीवार्तया चेतितः अतिदूरस्थमपि महाविषाक्रान्तं क्षणेन जीवयन्नासीत्। एतं विशेषमालक्ष्य पट्टिकामार्गीयाधिकारिण अशुल्कमेव तंत्रीप्रदानं विषाक्तेभ्यः आदिशन्। एतेन च आसेतुहिमाचलं लक्षशो जनाः जीविताः। स च तपस्वी किंचन यंत्रं संस्थाप्य दिवंगत इति इदानीमपि तत्र पूजनादिना सर्पविषनिवृत्तिर्भवतीति च तज्ज्ञाः वदन्ति।

एतादृशविद्यायाः पुरुषान्तरसंक्रमणावकाशः यदि आदस्यत व्यापने च सौविध्यमकरिष्यत च तदा प्रपंचे एव सर्पदंशनाद्भीतिरनशिष्यत्।

२. दक्षिणापट्टिकामार्गपार्श्वे एव पुत्तूरसमीपे ईसलापुरनाम्नि

ग्रामे क्षत्रियः कश्चन शल्यतंत्रज्ञः भग्नशल्यसन्धानं अतिनिपुणं करोति। विशल्यकरण्यथवा सन्धानकरणी तस्य वशे वर्तते। स स्वशक्त्या कांचन चिकित्साशालां प्रकल्प्य लक्षशो भग्नास्थीन् जनान् चिकित्सते। यद्यपि तस्य मद्रास - जनरलरुग्णालये एकस्मिन् विभागे सप्ताहस्यैकदिनं चिकित्सावकाशो दत्तः तथापि अकिंचित्करमेतत्। तस्य चिकित्सारहस्यस्य अधुनातनवैद्यकलोके प्रसारणद्वारा प्रतिरुग्णालयं च तादृशचिकित्सायाः प्रापणे खलु सा विद्या वर्धेत, रुग्णाश्च सर्वे सुखिनो भवेयुः।

३. कामलाव्याधेः चिकित्सा ग्रामेषु अतिसुलभप्रक्रियया अमोघमाचर्यते। तत्र हरितपत्रद्रवः, अंजनं, औषधं, मणिबन्धप्रदेशे दाह इत्यादयः बहवः प्रभेदा वर्तन्ते। सर्वा अपि प्रक्रियाः अव्यर्था एव अनुभूयन्ते। तासां रहस्यपरिज्ञानेन प्रमाणीकरणेन अधुनातनवैद्यकयोजनेन च तादृशव्याधेः निरोधः सुलभो भवेत्।

४. महाकुष्ठ - प्रशमनाय विरागिभिः कैश्चित् ताम्रभस्म क्षणे कृत्वा प्रदीयते, येन स रोगः मूलनाशं नश्येत्।

५. एवं क्षयादिदुर्घटव्याधीनां निवारणं सुलभमार्गेण अल्पकालेनैव क्रियते कतिभिश्चित्।

एवं एकैकशो निरूपणे महती पट्टिका निर्गच्छति। अयं च विषयः प्रजानां नायकानां च न नूतनः। अपितु तादृशविद्या तत्तद्व्यक्तिविशेषमात्र - निष्टाः तेनैव साकं नंक्ष्यन्ति। अतः सामदानाभ्यां तद्विद्याया जातीयकरणमावश्यकम्।

संस्कृतवाङ्मये परिशोधनीया अंशा बहवो वर्तन्ते अतस्तत्परिशोधनमनवरतं कारयितव्यम्—

१. अश्मभेदी, शिलाभित् इति काचन ओषधि। सा सर्वत्र लभ्यते ग्रामेष्। तन्नाम्ना सा अश्मानं भेदयेदिति तद्गुणविशेषः स्फोर्यते। आन्ध्रभाषाया-

मपि तन्नाम "कोंडपिंडि" इति अर्थात् पर्वतचूर्णीकर इति। एतावता पर्वतस्य अथवा शिलायाः भेदने पट्वी सा इति पर्यवस्यति। कथं सा तत्कर्मकरोतीति परिशोधनीये तद्रहस्ये विज्ञाते कियान् लाभो भवेदिति विभाव्यताम्।

२. अस्थिसंहारः इति काचन औषधिः। सा च प्रभिन्नास्थीनि संयोजयेदिति तन्नाम्ना द्योतते। कथं तादृशं कार्यं करोति स इति परिशोधनीयं। प्राप्ते रहस्ये शल्यचिकित्सा सुलभा भवेत्।

३. एवमेव सार्धकनाम्नामोषधीनां गुणप्रभावादिकं संशोधनीयं। योगरत्नाकरे श्रीशैलखंडः कश्चन भागोस्ति, यत्र श्रीशैले तत्परिसरे च विद्यमानाः महाप्रभावाः पत्रमूलशिलाजलादिकानि बहूनि तत्प्राप्तिप्रक्रियया साकं नित्यनाथसिद्धेन प्रकाशितानि। तत्पठनवेलायां च तत्प्रतिपादितांशाः अत्युक्तिवत् परिहासप्रायाः द्योतन्ते। किन्तु सिद्धस्य तस्य स्वाननुभूतविषये अत्यक्त्या प्रकाश्यं किं भवेदिति विचारणे मनो विश्वसिति तत्र। तस्य ग्रन्थस्य आधारेण बहुपरिशीलनीयं तत्र विद्यते, प्रत्येकं नागार्जुनसागर सन्निवेश -श्रीशैलपथकादियोजनासमये। तन्निरूपितेभ्यः शतसहस्रेभ्यो रहस्येभ्यः एकद्वरहस्यपरिचयेपि धन्यस्स्यात् भारतदेशः।

अतः भारतसर्वकारेण प्रदेशसर्वकारैः प्रजाभिः प्रजाहितसंस्थाभिश्च संस्कृतस्य भारतीयसंस्कृत्याः रक्षणे पोषणे प्रचारणे परिशोधने च यावच्छक्ति प्रयतितव्यम्।



# श्रीपारिजातापहरणकाव्यम्

ले० श्री. न. च. वेंकटताताचार्यः, विशाखपट्टणम्.

[पूर्वानुबन्धः]

सन्दर्शनेनामरसुन्दरीणां सासूयवाक्यानि हरिस्स श्रृण्वन् ।
गेहाङ्गणे देवपतेस्तदानीं भूमाववरोहदसौ सुपर्णात् ।।

हस्तावलम्बेन सुरेश्वरस्य उत्तीर्य कक्ष्यात्रितयं मुरारिः ।
ददर्श पूज्यां जननीं सुराणां सुखेन विश्रान्तिमतीं तदानीम् ।।

दृष्ट्वा प्रियासहित एव कृतप्रणामः
भौमेन दैत्यपतिना हृतकुण्डले सः ।
तस्यै ददौ निजपटाञ्चलसंवृते ते
सा चादिशत् तमुपवेष्टुमथाब्रवीच्च ।।

सर्गं करोषि भुवनानि विरिञ्चनाम्ना
रक्षां करोषि हरनामतया जगन्ति ।
नाशं करोषि हरनाम वहन् हि लोकान्
को नाम वर्णयितुमर्हति ते विभुत्वम् ।।

उपेत्य मीनाकृतिमब्धिमध्ये सुरारिनिक्षिप्तसमस्तवेदान् ।
प्रदातुकामो द्रुहिणाय तस्मै निहत्य तं स्वीकृतवानसि त्वम् ।।

देवेषु दैत्येषु समेत्य मैत्रीं मन्थानभूतेन सुमेरुणा तम् ।
दुग्धाब्धिमाशु प्रविलोडयत्सु कूर्माकृतिं प्राप्य हि तिष्ठसि त्वम् ।।

यदा हि धात्री जलधौ ममज्ज वराहरूपेण समुद्धरिष्यन् ।
हिरण्यनेत्रं सहसा निहत्य ररक्षिथाऽत्रत्यजनानशेषान् ।।

अलं कुमाराप्रियभाषणेन स्तम्भेऽत्र मे दर्शय विष्णुमूर्तिम् ।
इत्यालपन्तं सुरलोकशत्रुं नृसिंहरूपेण जघन्थ हि त्वम् ॥

भार्यासु कश्यपमुनेः विहितुं च धन्यां
मामद्य कृष्णसुतरूपतया वतीर्य ।
रक्षोधिपं बलिमुपेत्य पदत्रयार्थी
पाताललोकमनयः किल तेंऽघ्रिपद्मात् ॥

परश्वथं हस्तगतं विधाय ह्यनेकवारं विनिहत्य राज्ञः ।
सहस्रबाहून् सहसान्यकृन्तः नृपस्य सूनोः कृतवीर्यनाम्नः ॥

भार्यापहारजनितापयशोऽपहर्तुं
पौलस्त्यदानववधं सहसा विधास्यन् ।
शाखामृगाधिपतिना रविसूनुना त्वं
सख्यं चकर्थ किल पङ्क्तिरथात्मजात ॥

संभूय कृष्णाग्रसहोदरस्सन् प्रलम्बदैत्यं सहसा निहत्य ।
सूर्यात्मजावारिभरं निवार्य हलायुधेनाऽकृषथाः पुरीं ताम् ॥

पुरा सतीभ्यः त्रिपुरस्थिताभ्यः जारत्वशिक्षां बहुधा वितीर्य ।
अवध्यभूतान् सहसा तदीयान् नाथानधाक्षीः शिवनेत्रवह्नौ ॥

एवं च संस्तुत्य सुरप्रसूः सा समादिशत् स्थातुममुं च तत्र ।
पत्नीसमेतः स च तां त्रियामां निनाय सन्तुष्टमनास्सुखेन ॥

रामानुजो निजवधूमवदत्प्रभाते
कान्ते ! विलोकयितुमिच्छसि नन्दनं किम् ?
अङ्गीचकार ललना चलितुं च तत्र
तौ दम्पती सपदि जग्मतुरत्र मोदात् ॥

तदा प्रवृत्तं ऋतुषट्कमत्र नितान्तमोदं जनयत् जनानां ।
यदा मुरारिः प्रियया चचार सुराङ्गनाभिस्सहितो वनेऽस्मिन् ॥

प्रसूनसंदोहसमन्वितास्ते द्रुमा विरेजुः बहुगन्धपूर्णाः ।
दत्वा प्रमोदं यदुनन्दनस्य समेयुषस्स्वीयसतीमतल्ल्या ॥

समीरनुन्नैः बहुशुष्कपत्रैः अवापदेशे परिपूरितेऽस्मिन् ।
लता विरेजुर्विहतांशुकान्ताः ह्रदे यथाऽऽसन् पशुपालकान्ताः ॥

तस्मिन् वसन्ते खगसंहतिश्च भृङ्गावलिश्चातितरां मुमोद ।
जग्ध्वा नवोद्भिन्नकुजांकुराणि पीत्वा नवोद्भूतमरन्दपूरम् ॥

नन्दाह्वयाभीरसुतस्तदानीं उद्यानदेशे शुभनन्दनाख्ये ।
आनन्दपूर्णामरसुन्दरीणां वृन्देन साकं प्रियया चरन् सः ॥

पश्येह कान्ते वनवाटिकायाः पाणिग्रहे चैत्रवरेण सद्यः ।
जालानि पेतुः सहसा तरुभ्यः शीर्षार्पितानीव शुभाक्षतानि ॥

अस्मिन् वने दाडिमबीजजालं संदृश्यते वर्षुकमेघमुक्तम् ।
श्रीशक्रगोपौघसमानरूपं संपादयन् नेत्रमनोहरत्वम् ॥

एवं स कृष्णो निजवल्लभायै उद्यानशोभां बिनिवेदयंश्च ।
तत्रत्यवृक्षावलिनिर्गतैस्तैः संभावितोऽभूत् मकरंदपूरैः ॥

**इति तृतीयाश्वासः ।**

---

## आंध्रप्रदेशे संस्कृतविश्वविद्यालयस्थापनं

६–७–७२ दिने शासनसभा-समावेशे आन्ध्रमुख्यमन्त्री अवदत् – संस्कृतविश्वविद्यालय-स्थापनाय विजयनगरं, एलूरु, तिरुपति, गोरंट्ल, हैदराबाद इति पंच स्थलानि तात्कालिक-बुद्धौ वर्तन्ते । परन्तु विश्वविद्या-लयानुदानसमितेः सहकारा-

भावात् विषयः प्रथमावस्थायामेव वर्तते । सा च समितिः वदति एकभाषाविषये एकविज्ञानविषये वा स्थाप्यमानानां विश्वविद्यालयानां अनुदानं नैव दीयत इति । तस्मादालोच्यते संस्कृतेन सहैव आयुर्वेदादिविद्या अपि संयोज्य बहुलार्थसाधकसंस्थात्वेन तस्य स्वरूपनिष्पादनमावश्यकमिति । जुलैमासान्ते एव विद्याविशेषज्ञान् आहूय विषयो निर्णेष्यते । परन्तु अस्य विश्वविद्यालयस्य बोधनपद्धतौ अन्येभ्यः प्राच्यविद्याबोधनपद्धतेर्भेदः संपद्येत। संस्कृतविश्वविद्यालयस्थापनविषये आन्ध्रसर्वकारः औदासीन्यमावलंबत इति प्रवादस्तु अनुचित इति ।

गोरंट्ल वेंकन्नधर्मसंस्थाप्रतिनिधिवर्गः मुख्यमन्त्रिणं अपश्यत्, तदध्यक्षश्च श्री एन्. चेंचुरामानायुडः एवं मुख्यमंत्रिणे व्यजिज्ञपत् च– प्रकाशमण्डले तिम्मसमुद्रे, अथवा म्रोटुपल्यां वा प्रभुता - संकल्पितस्य संस्कृतविश्वविद्यालयस्य स्थापने सप्तोत्तरशत-एकरापरिमितं अत्युत्तमकेदारक्षेत्रं सार्धत्रिलक्षरूप्यकाणि च तदर्थं दास्यामः इति, संस्कृतस्य आयुर्वेदस्य च प्रचारप्रसारौ सा धर्मसंस्था आकांक्षते इति च ।

गोरंट्ल वेंकन्नेति कश्चन धनी वदान्यः संस्कृत-भारतीयसंस्कृतिसमुद्धरणकामी च स्वीयया संपदा सर्वयापि धर्मसंस्थां कांचन १९४१ संवत्सरे संस्थाप्य ३५० एकरपरिमितसुक्षेत्राणि भवनानि धनानि च तदायत्तीकृत्य १९४७ वत्सरे दिवं गतः । ओंगोले संस्कृतविद्यापीठम्, प्राच्यसंस्कृतोन्नतपाठशालां च निर्वहति सा संस्था ।



श्रीरस्तु

# श्रीवेंकटेशशतकम्

पैत्तांबाडि महाकवि व. रामानुजाचार्यविरचितम्.

श्रीवक्षः परमं ज्योतिः वेङ्कटेशाख्यमुज्वलम् ।
प्रपद्ये सर्वफलदं सर्वेषां सर्वदा नृणाम् ।।

मातरं सर्वजगतां वन्दे वाञ्छितदायिनीम् ।
पद्मावतीं श्रियं देवीं ईश्वरींत्रिदशास्वपि ।।

श्रीमद्विभूतियुग्मस्य नेतारं वेत्रचालनात् ।
विष्वक्सेनमनीकेशं वन्दे सूत्रवतीसखम् ।।

ददर्श द्राविडाम्नायान् यो नः प्रावर्तयन्मतम् ।
प्रपन्नकुलकूटस्थं तं शठारिमुनिं भजे ।।

श्रीनिवासे मतिर्मेऽस्तु भक्तिरूपेति योऽस्तुवत् ।
विशिष्टाद्वैतसिद्धान्तभाष्यकारं नमामि तम् ।।

श्रीभाष्यकारसिद्धान्तो येन संस्थापितो दृढम् ।
श्रीवेङ्कटेशघण्टांशं वन्दे वेदान्तदेशिकम् ।।

प्रातिष्ठिपत् श्रीनिवासं स्वाश्रमान्ते शुकाश्रमे ।
यस्सदा सेवितुं नौमि रङ्गरामानुजं मुनिम् ।।

काञ्च्याश्रमेऽर्पयामास मङ्कूरं श्रीपतौ हरौ ।
यः प्रपद्ये गुरुं शान्तं श्रीनिवासमुनीश्वरम् ॥

उपादिशद्यः श्रीभाष्यं भगवद्विषयं मम ।
तं तृतीयं गुरुं वन्दे रंगलक्ष्मणयोगिनम् ॥

पंचसंस्कारकर्तारं तातपादं ममाश्रये ।
श्रीमदादिवराहार्यं येनाऽभूदयमीदृशः ॥

इति गुरुवन्दनदशकम् ।

## अथ प्रारम्भदशकम् ।

दृष्ट्वा पुराणेषु भवत्परेषु ह्यवाप्तकामा बहवस्सुराद्याः ।
स्तुत्वाऽभवन् त्वामिति ते स्तवेऽहं प्रवृत्त एषोऽस्मि वृषाद्रिनाथ ॥

अद्यापि भूमावखिला मनुष्यास्संप्रार्थ्य सर्वेश्वरमिष्टसिद्ध्यै ।
त्वां शेषशैलेश्वर लब्धकामाः भवन्त्यतस्तौम्यहमद्य सिद्ध्यै ॥

कूरेशस्स्वकृतस्तवेषु भगवन् तुष्टाव यं त्वां पुरा
पश्चात् त्वत्करुणाविलासशतकात् वेदान्तसूरिर्गुरुः ।
तत्तादृग्गुणपुष्कलं त्वहमपि त्वां स्तोतुमारब्धवान्
तत्पूर्णं कुरु सत्वरं च सफलं त्वं वेङ्कटाधीश माम् ॥

विरचय्य दशविधान्यपि रुक्मांगदचरितनाटकं चान्यत् ।
द्वादश च रूपकाणि ग्रान्थान्यन्यन्यामु स्तवं कुर्वे ॥

कृत्वा च लक्ष्मीविषयं सयस्त्रं आचार्यवर्यानखिलान् प्रणम्य ।
स्वाभीष्टसिध्यै शतकं करोमि श्रीवेङ्कटेशस्तव रूपमद्य ॥

अहोबिलाधीशरमानृसिंहहरेर्विधाय स्तवमेष पूर्वम् ।
त्वदर्चितस्याप्यनवाप्तकामः कुर्वे वृषाद्रीश नुतिं तवाद्य ॥

(अनुवर्तते)

# प्रिये ! चारुशीले !

रचयिता श्री सूरम् श्रीनिवासः

(वाल्मीक्यादिपुण्यशीलैः सीतायाः निर्दोषिता निरूपिता । तदा सा मातारं प्रार्थ्य तया नीता भूमौ निलीनाऽभूत् । तदानीं शोकाकुलः रामः एवं विललाप)

प्रिये प्रिये जानकि मां विहाय गताऽसि मातुर्निकटं त्वमद्य ।
गृहं तु भर्तुः वनिताजनानां वासप्रदेशः किमु विस्मृतोऽभूत् ? ॥

नयनं परिभाति सन्निधौ मे वदनं नैव जहाति मानसम् ।
हृदयं तव नाम भाषते शृणुतात् वा कुरुतात् प्रियं प्रिये ॥

न गता मम चित्तमन्दिरात् न गता त्वं मम नेत्रकन्दरात् ।
परिदेवनभावभावनात् विरहस्ते सुतरां प्रबाधते ॥

अचिरेण समाव्रज प्रिये प्रियसंजल्पविनोदसिद्धये ।
रघुवंशशिरोविभूषणं तव सत्सन्निधिमेव कांक्षते ॥

सहोदरातिप्रियकामिनीचरो बलातिरेकप्रमदान्तरंगकः ।
सुराधिपात्मोद्भववानराधिपो हतो मया त्वत्सुखदानहेतुना ॥

स्खलत्तरंगातिविभासमानो सरित्समाराधितरम्यदेहः ।
निरुद्धवान् सेतुविधानकृत्ये त्वब्धिं तदा त्वत्सुखदानहेतोः ॥

अखर्वगर्वांचितविक्रमेण समस्तलोकाधिपसेवितेन ।
सुरद्विषा चाऽपहृता पुरा त्वं अन्वेषिताऽद्य क्वनु भावयामि ॥

घोरप्रकारोद्भटघूर्णमाने युद्धे दशास्यः द्विदशोरुबाहुः ।
मया हतस्तीक्ष्णशिलीमुखैस्सः त्वदर्थ मात्मेश्वरि, तत् वृथाऽसीत् ॥

त्वं मातुरङ्कमधिगन्तुमतीव लोभात्
त्यक्त्वा समस्तहितबान्धववर्गमद्य ।
भूमौ निलीय सुकुमारकुमारकौ ते
वात्सल्यभोगविधुरावधुना करोषि ॥

तव नयनविदीप्त्या मे दृशोः कान्तिरासीत्
तव मधुरवचोभिः मद्गिरां दीप्तिरासीत् ।
तव मृदुदरहासैः मे स्मितानां प्रथाऽसीत्
अयि ! कथमधुना स्यात् त्वद्विहीनस्तु रामः ॥

त्वत्स्नानपुण्यजलदेवनदीनदानि
त्वत्स्पृष्टिदृष्टिविरहादुदितां प्रबाधां ।
सोढुं न शक्तिमभियान्ति, समाव्रज त्वं
तत्पुण्यमातृहृदयप्रियकल्पनार्थं ॥

विदग्धनारीपरिसेव्यमानधर्मप्रवृत्तिः विगतप्रवृत्तिः ।
कृता त्वया नैव समर्थनीया एह्येति मां जानकि चारुशीले !



# पाठकेषु विज्ञापनम्

गैर्वाणी नववर्षवयः अतीत्य जनवरि मासे दशमे वयसि पदं न्यधात्। इयं चैकवर्षपर्यन्तं त्रैमासिकी स्थित्वा द्वितीयवत्सरात् मासिकी प्रकाश्यते। द्वित्रसन्दर्भान् विहायैषा मासक्रममनपहाय बहिरायातीति सुविदितं भवताम्। अद्यतनकाले संस्कृतपत्रप्रकाशनं कीदृशक्लेशबहुलमिति सर्वविदितम्। तत्रापि एतत्पत्रस्य क्लेशा विलक्षणा अनुभूयन्ते। तेषां कीर्तनेन नात्र किमपि प्रयोजनम्। रचनादौर्लभ्यं रसिकवैरल्यं चेति खेदयति चेतः निर्वाहकाणाम्। विषयवैविध्येन सारल्येन वैचित्र्येण नूतन-रचनाभ्यासप्रदर्शनेन च सुतरां प्रशंसितमिदं पत्रं आर्थिकदौर्बल्येन व्यथते। माकिं उपशतसंख्याका एव सदस्याः छंदं अर्पयन्ति, अव-शिष्टा मूर्तयश्च निर्मूल्यमेव विभज्यन्ते वारं वारम्। केचन महानु-भावाः विना याचनं प्रेषयन्ति स्वीयं छन्दं उचितकाले। परन्तु बहूनां न द्रवति हृदयं एकदापि। प्रेषव्ययबहुले काले, परिमित-परिवारवत्या अनया पत्रिकया प्रतिव्यक्ति विज्ञापनं असाध्यमिति हेतोः एवं विज्ञाप्यते यत् अनुपदं अथवा यावच्छीघ्रं, स्वीयं छन्दं (रू ४–००) प्रेषयित्वा पोषयन्त्विति।

रूप्यचतुष्टयं यद्यपि भवतां उद्देशे अल्पमेव तथापि गैर्वाण्याः महते प्राणलाभाय संपद्येत। अन्यथा न केवलमियं गैर्वाणी ह्रास-मेष्यति, अपितु स्वाश्रयभूतां संस्कृतभाषाप्रचारिणीं सभामपि ह्रसयिष्यति।

अतः पुनर्निवेद्यते पाठका स्वस्वमनसा संचिन्त्य यथाशीघ्रं छंदं अर्पयितुं तर्पयितुं च गैर्वाणीम्।

इति,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
*R. N. 1845/60.* *Postal R. No. H. 493*

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ४-००

## प्रहेलिका



१. भक्तेभ्यो भगवान् ददाति खलु किं ?
२. रोगी भजत्येव किम् ?
३. का जाया भुवनाधिपस्य ?
४. कथितः साम्नां हि भेदः कथम् ?
५. कर्तारं भुवनत्रयस्य कमिति प्राहुश्च लोकाः स्वयम् ?
६. मत्प्रश्नोत्तरमध्यवर्णघटितां सेंवस्व निःश्रेयसे ॥

### उत्तराणि

(१) अभयम् (२) अगदम् (३) अवनिः
(४) उद्गीथः (५) धातारम्
(६) भगवद्गीतां

—श्री बालगणपतिभट्टः, श्रीरंगपत्तनम्.

Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500